हेतुतायाः क्लृप्तत्वाच्च स्वाविधमितरस्य शक्तविशेषणत्वात् एवञ्च याजनाध्यापनप्रतिग्रहैर्द्विजोधनमर्जयेदित्यादावपि लिङः परिसंख्यैवार्थस्तेन याजनादिभिन्नैर्ब्राह्मणस्य धनार्ज्जनं प्रत्यवायहेतुरिति वाक्यार्थः न कृष्यादेरनापन्नो ब्राह्मणो धनमर्ज्जयेदित्यादिवचनैरुपायान्तरेण विप्राणां धनार्ज्जनस्य प्रत्यवायहेतुत्वस्य स्फुटत्वात् नतु याजनाद्यैः ब्राह्मणो धनमर्जयेदेव इति नियमविधिर्याजनादिना धनानर्जने ब्राह्मणस्य प्रत्यवाया श्रुतेः।

लङ् लक्षयति।

या स्मयोगं विना धातोः शपन्तस्यार्थधर्म्मिके।
अतीतत्वप्रहे हेतुस्तादृशी तिङ् लङुच्यते।

स्मशब्दस्य योगं विना शपन्तस्य धातोरर्थेऽतीतत्वस्यान्वयधीहेतुर्यादृशी तिङ् तादृशी तिङ् लङ् उच्यते शिवादिभ्यस्त्वणेव स्यादित्यन्वेव नञो द्विरुक्तेरनितरत्वं लङोच्यते इति वा पाठः तिवादिस्य स्मशब्दोपसन्धानं विना धातोरर्थे नातीतत्वं बोधयति पपाचेत्यादौ लिङादिर्बोधयन्नपि न शपन्तस्यापचदित्यादौ तु विनापि स्मशब्दयोगं लङस्तथात्वम् अदीव्यदित्यादौ शपन्तस्य धातोरर्थे स्वार्थमबोधयन्नपि दिवादिस्तत् सजातीय एव तण्डुलमपचत् इत्यादावसौ निरुक्तसजातीयत्वेऽपि न तिङ्त्वमतस्तद्व्युदासः प्रकृतयर्थेऽनुमतत्वाद्यतनत्वाद्यनाकाङ्क्षितत्वेन विशेषणाच्च पच्यतां पच्येतां पचतामित्यादावपाक्तां अपच्नतां आपाक्तमित्यादौ च लोटो लृङ् लुङस्तामातां प्रभृतौ न प्रसङ्गः। अत्रापचदित्यादौ लङोऽतीतः काल इव तन्निष्ठं ह्यस्तनत्वमप्यर्थः

तच्च पूर्व्वंदिनवृत्तित्वमिति कौमाराः ह्यस्तनत्वं लङो नार्थः किन्त्वद्यतनभिन्नत्वं अनद्यतने लङिति पाणिन्यनुशिष्टेरि-त्यपरे। तथा च वर्त्तमानध्वंसप्रतियोगिपूर्व्वदिनवृत्तिपाक-कृतिमान् तादृशप्रतियोग्यनद्यतनकालवृत्तिपाककृतिमान् इति वा तत्र बोधः। प्रायिकञ्चेदं तेन ह्यस्तनत्वादिशून्येऽपि काले क्वचिल्लङादिः प्रयोगः। ह्योऽपचदित्यादौ ह्यःपदा-ख्याताभ्यामेकमेव निरुक्तं ह्यस्तनत्वं बोध्यते समभिव्याहारन्या-यात् अन्यथा पक्त्वा पचतीत्यत्रेव निराकाङ्क्षतापत्तेः।

लुङं लक्षयति।

हन्तेः कृतवधेरर्थे यातीतत्वस्य बोधिका।
सिजन्तस्याथवा धातोस्तादृशी तिङ् लुङोच्यते।

कृतवधादेशस्य हन्तेरर्थे किंवा सिजन्तस्य धातोरर्थे यातीतत्वस्य बोधिका तादृशी तिङ् लुङा लुङ्शब्दे-नोच्यते। जघान हन्तिस्म इत्यादौ लिङ्लङादिको हन्ते-रर्थेऽतीतत्वस्य बोधकोऽपि न कृतवधादेशस्य न वा सिज-न्तस्य अवधीत् अवधिष्टां अवधिषुरित्यादौ तु लुङ् मात्रं तथा वध्यात् वध्यास्तां वध्यासुरित्यादौ कृतवधादेशस्य तस्यार्थे स्वार्थानुभाविकापि आशीर्नातीतत्वस्य बोधिका। अत्राप्यनुमतत्वह्यस्तनत्वाद्यनाकाङ्क्षितत्वेन विशेषणात् पचतां अपचत् अपचतामित्यादौ लोड़ाद्यतिप्रसङ्गः अत्रापाक्षी-दित्यादौ अतीतः काल इव तन्निष्ठमद्यतनत्वमपि लुङामर्थ-स्तेन वर्त्तमानध्वंसप्रतियोग्यद्यतनपाककृतिमान् इत्येवं तत्र बोधः। रीतिरत्रैव।

लिटं लक्षयति।

द्विरुक्तभिन्नशात्वर्थे स्वार्थस्यान्वयबोधने।
या न योग्या तादृशी तिङ् लिट्पदेनाभिधीयते॥

अशिश्रियत् अदुद्रुवदित्यादौ द्विरुक्तस्यैव अपाचीदित्यादौ तदन्यस्यापि धातोरर्थे स्वार्थान्वयं लुङादयो बोधयन्ति लिटस्तु जघान जघ्नतुरित्यादौ द्विरुक्तस्यैव धातोरर्थे पिपचति पापच्यते इत्यादौ सनादयस्तादृशा अपि न तिङः तत्रापि प्रकृत्यर्थे वर्त्तमानत्वाद्यनाकाङ्क्षत्वेन विशेषणात् पचे पचावहि पचाव इत्यादौ न लडादावतिप्रसङ्गः।

काशाञ्चक्रे लोलूयामास ईहाम्बभूव इत्यादावाम इव कृञादेरप्यनुप्रयुक्तस्य पदसाधुतामात्रत्वादसम्भवापत्तेरन्यथा निर्वाप्ति।

द्विरुक्तस्य यजेरर्थे चकास्तेराम्युतस्य वा।
या स्वार्थस्यान्वये हेतुः सा वा लिट् कथ्यते बुधैः॥

जुहोतीत्यादौ द्विरुक्तस्य धातोरर्थे स्वार्थबाधकोऽपि लडादिर्न यजेरर्थे। चकास्तीत्यादौ चकासधातोरर्थे तादृगपि नामन्तस्य मनश्चचाल सुरभिमाग आजगाम इत्यादावतीतः काल इव धात्वर्थनिष्ठं परोक्षत्वमपि लिटोऽर्थः तच्चातीन्द्रियत्वं तेनातीतकालवृत्त्यतीन्द्रिय चलनवत्मन इत्याकारकस्तत्र बोधः। चैतस्याह पपाच इत्यादौ तु लिडुपस्थाप्यस्यापि परोक्षत्वस्य न पाकादावन्वयाऽयोग्यत्वात्। एतेन व्यातेने किरणावलीमुदयन इत्यादि व्याख्यातम् शेषं पूर्ववत्।

लुटं आशीर्लिङञ्च क्रमेण लक्षयति।

धात्वर्थे श्वस्तनत्वस्य बोधिका तिङ् लुडुच्यते।
आशीर्लिङाशंसनस्य भावित्वस्य च बोधिका।

श्वः पक्ष्यतीतप्रादौ धात्वर्थे श्वस्तनत्वस्य बोधकमपि श्वःपदं न तिङ् लृडादयस्तु धात्वर्थे भावित्वमेव बोधयन्ति न श्वस्तनत्वमपि जीवतु भवानित्याशी तु तुवादिकं आशंसनीयत्वस्य बोधकमपि न भावित्वस्य भावित्वस्य बोधकोऽपि लृड़ादि नाशंसनीयत्वस्य भूयात् भूयास्तामित्यादौ पुनरच्छादृशैवाशीर्लिङ प्रकृत्यर्थस्याशंसां भावित्वञ्चानुभावयन्ति। अथ पाकगोचरैककृतिदशायामपि तद्गोचरा परकृतेरतीतत्वाद्भविष्यत्वाच्च तदानीमयं पपाच पक्ष्यतीत्यादिप्रयोगप्रसङ्गः पाककृतित्वावच्छेदेनातीतत्वादेरन्वयोपगमेन तदा तु पपाच पक्ष्यतीत्यादेरयोग्यत्वापत्ति एतदवच्छेदेनातीतत्वभविष्यत्वयोर्बाधादिति चेत् न पाककृतित्वावच्छिन्नधर्मिकायां तत्तत्पाकगोचरकृतित्वावच्छेद्यस्वरूपसम्बन्धेनैवातीतत्वाद्यन्वयबुद्धौ पाकार्थकधातूत्तर लिटत्वादिना हेतुतयैव उक्तदोषव्युदासात् चुल्ल्याद्यारोपणादिकं हि न प्रत्येकं पाकपदार्थः किन्तु स्थाल्यारोपणाग्निनिवेशनतुषप्रक्षेपाद्यनुप्रस्फोटनपर्यन्तस्तत्तत्क्रियाकलाप एव। यदाह दुर्गः क्रियते इति क्रिया साच पूर्व्वापरीभूतावयवैवेति तथाच तावत्क्रियाकलापस्य प्रत्येकगोचरकृतेरतीतत्वभविष्यत्वयोर्बाधात् अवान्तरतुषप्रक्षेपादिदशायां पपाच पक्ष्यतीतप्रादिको न प्रयोगः। तचैव सूपपाक निष्पाद्य तण्डुलपचनतप्रपि पुंसि अथ पपाच इति स्यात् निष्पन्नपाकगोचरयावत्कृतेरतीतत्वात् इति वाच्यमिष्टत्वात् तण्डुलं पपाचे

त्यादि प्रयोगस्यैव तत्रायोग्यत्वात् अन्यथा सूपमपाक्षीदि-त्यादिप्रयोगस्तत्र कथं स्यात् । अतएव सम्प्रति सूपं पच-त्यपि पुरुषे सूपकर्म्मकनिष्पन्नपाकगोचरकृतित्वावच्छेदेना-तीतत्वमुपादाय सूपमपाक्षीदित्यादिकः प्रयोगो भवत्येव परन्त्वद्य सूपमपाक्षीदित्यादिरेव न तत्र प्रयोगः सूपकर्म्म-काद्यतनपाकगोचरकृतित्वावच्छेदेन अतीतत्वस्य बाधा-दिति युक्तमुत्पश्यामः ।

लृटं लृङञ्च लक्षयति ।

क्रियातिपाते कालस्य भाविनः प्राक्तनस्य च ।
वैशिष्ट्यबोधिका या तिङ् लृट् च लृङ् च क्रमादिमे ।

या तिङ् क्रियाया धात्वर्थस्यातिपाते विगमे भाविका-लावच्छेद्यत्वस्य बोधिका तादृशी लृट्, यात्वतीतकालाव-च्छेद्यत्वस्य तादृशी लृङ् तण्डुलश्चेत् प्राप्स्यत्योदनमपि पक्ष्यति चैत्र इत्यादौ स्यति प्रभृतयश्चैत्रादेर्भाविकालाव-च्छेदेन तण्डुलप्राप्त्याद्यभाववत्त्वमनुभावयन्ति तथैवश्चेद्-प्राप्स्यत् ओदनमप्यपक्ष्यत् इत्यादावतीतकालावच्छेद्य-मिन्धनप्राप्त्यभाववत्त्वं तथाच भाव्यतीतकालाविव क्रिया प्रतियोगिकोऽभावोऽपि तयोरर्थः वस्तुतो भाव्यादिकालाव-च्छेदेन तण्डुलप्राप्त्यभावप्रयुक्त ओदनपाकाद्यभाव एव उक्तस्थले लृङादिना चैत्रादावनुभाव्यः क्रियाविरहप्रयुक्तस्य क्रियान्तरविरहस्यैव क्रियातिपातत्वात् अतएव चैत्रश्चेदपति-ष्यत् ग्राममपरगमिष्यदित्यादिको न प्रयोगः तीर्थञ्चेद्-गमिष्यत् सार्थमपरलप्स्यत इत्यादिकस्तु चिन्त्यः सार्थ-लाभाद्यभावस्य तीर्थगत्याद्यभावाप्रयुक्तत्वात् इति तण्डु-

लभेत् पचेरोदनमपि भुञ्जीतेत्यादौ तु क्रियातिपतनस्य वर्त्तमानत्वमेव लिङा प्रत्याय्यते न तु भावित्वमतीतत्वं वेति तदुदाहः।

क्रमप्राप्तं धात्वंशप्रत्ययं लक्षयति।

सुबर्थानन्वितस्वार्थतिङन्यप्रत्ययस्तु यः।
स धात्वंशोऽथवा धातोरन्तांशप्रत्ययस्तथा।

सुबर्थानन्वितयादृशस्वार्थको यस्तिङन्यः प्रत्ययः स तादृशार्थे धात्वंशप्रत्ययः पुत्रीयतीत्यादौ क्यजाद्यर्थस्य इच्छादेर्न सुबर्थेऽन्वयः किन्तु तिङर्थे पचतीत्यादौ सुबर्थानन्वितप्रत्ययार्थकोऽपि तिबादिर्न तिङन्यः पिपक्षया कुरुतेत्यादौ तु भावक्तलभ्यस्य इच्छास्वरूपस्यैव सुबर्थकरणत्वाद्यावन्वयः न तु सनन्तार्थपाकेच्छामात्रस्य अस्तु वा शान्वयसंज्ञानुरोधेन धात्वन्तावयवरूप एव प्रत्ययो धात्वंशप्रत्ययः पिपक्षादिधात्वन्तभागत्वात् सनादिप्रत्ययस्य।

विभजते।

नामप्रकृतिकश्चायं धातुप्रकृतिकस्तथा।
तत्रादिमः क्यच्क्यङादिरपरः सन्यङादिकः।

अयं धात्वंशप्रत्ययो नामप्रकृतिको धातुप्रकृतिकश्चेति द्विविधः। तत्रादिमो नामप्रकृतिकः क्यच्क्यङादिः अपरो धातुप्रकृतिकः सन्यङादिः चैत्रः पुत्रीयति इत्यत्र क्यजर्थेच्छायां तत्प्रकृत्यर्थतावच्छेदकीभूतपुत्रत्वाद्यवच्छिन्नविषयतया प्रकृत्यर्थस्य पुत्रादेस्तस्याश्च तिङर्थे आश्रयत्वे निरूपकत्वेनान्वये साकाङ्क्षत्वात् पुत्रत्वेन पुत्रगोचरेच्छाया आश्रय-

त्ववांश्चैत इत्येवमन्वयधीः अतएव मनुष्यत्वादि प्रकारेण पुत्रेच्छादशायां पुत्रीयतीत्यादिको न प्रयोगः किन्तु मानुषीयतीत्यादिरेव। अतएवात्मनः पुत्रीयतीत्यादिरात्मपुत्रत्वप्रकारकेच्छाबोधनएवासामर्थ्यम्। आत्मपुत्रत्वादेस्तत्र प्रकृत्यर्थतानवच्छेदकत्वात् आत्मसम्बन्धी यः पुत्रः पुत्रत्वेन तद्गोचरेच्छाया बोधने तु तस्य सामर्थ्यमेव चैत्रस्य गुरुकुलमित्यादाविव वृत्तिशब्दैकदेशेऽपि पुत्रादावात्मप्रभृतेः प्रतियोगिविषयान्वयस्य व्युत्पन्नत्वात्। आत्मपुत्रीयतीत्यादौ पुनरात्मपुत्रत्वादेरपि प्रकृत्यर्थतावच्छेदकत्वात् तदवच्छिन्नपुत्रविषयताकेच्छाबोधने न किमपि बाधकं पश्याम। एतेन पुत्रकाम्यतीदं काम्यतीत्यादौ काम्यस्याप्यर्थो व्याख्यातः। पुत्रीयति माणवकमित्यादौ तु आचारसदृशाचारः क्यजर्थस्तद्विशेषणीभूते आचारे प्रकृत्यर्थस्य विशेष्यीभूते च माणवकादेः कर्मत्वेनान्वयः तेन पुत्रकर्मकाचरणसदृशं यन्माणवककर्मकाचरणं तदनुकूलकृतिमानित्याकारकस्तत्र बोधः। पुत्रकर्मकाचरणञ्च खाद्यपानादिना संवर्द्धनं तोषणादि। सर्पीयति शत्रुमित्यादौ सर्पकर्मकाचरणतुल्यं यच्छत्रुकर्मकाचरणं तदनुकूलकृतिमानित्यर्थः सर्पकर्मकाचरणञ्चात्र सर्पकर्मकताडनमारणादि ग्राह्यम्। प्रासादे कुटीयतीत्यस्य कुट्यधिकरणकाचारसदृशो यः प्रासादाधिकरणकाचारस्तदनुकूलकृतिमानित्यर्थः, कुट्यधिकरणकाचारश्चेह कुट्यधिकरणकशयनादिरूपोद्रष्टव्यः। कर्माधिकरणयोरेव सदृशाचारे क्यचोविधानात् वह्निकणइवाचरति धूलिर्दण्डेनेवाचरति चक्रं पोत्यादावर्थे धूलिर्वह्निकणीयति चक्रेण दण्डीः

यतीत्यादिकः कर्तृकरणादेः सदृशाचारे अपप्रयोगः। मा-न्ताव्ययाभ्यां न स्यादित्यनुशिष्टेरिदमिच्छति स्वरिच्छति इत्याद्यर्थे इदमिवाचरतीत्याद्यर्थे च न क्यच्। गव्यति नाव्यतीत्यादावपि गामिच्छति गामिवाचरति इत्यादिरर्थः। ओदौद्भ्यां क्यचः स्वरवद्भावादवाद्यादेशः नमस्तपोवरिवसां कर्तृत्वेऽपि क्यचोविधानात् नमस्यति देवानित्यस्य देवनतिं तपस्यति शत्रुमित्यस्य शत्रुसन्तापं वरिवस्यति गुरूनित्यस्य च गुरूणां परिचर्य्यां करोतीत्यर्थः। श्येनायते काक इत्यादौ क्यङोऽपि आचारसदृशाचारोऽर्थः तत्र च प्रकृत्यर्थस्य श्येनादेः कर्तृत्वेनैव साकाङ्क्षत्वात् श्येनकर्तृकाचारसदृशाचारवान् काक इत्येव तत्र बोधः। श्येनकर्तृकाचारश्च मांसहरणादिर्ग्राह्यः। श्येनी इवाचरतीत्यर्थे श्येनायते काकीत्यत्र भाषितपुंस्कत्वात् क्यङि पुंवद्भावः गार्ग्यमिच्छतीत्याद्यर्थे गार्गीयतीत्यत्र क्यचीव गार्ग्य इवाचरतीत्याद्यर्थे, गार्गीयते इत्यत्र क्यङ्यप्यपत्यप्रत्ययस्य लोपः। तथा वाजीयतीत्यादौ नस्य। ओजायते अप्सरायते पयायते पयस्यते गर्द्दभति अश्वती तत्रादावप्युक्तरीत्यैवान्वयः ओजसप्सरसोर्नितरां पयसः सोविभाषया। क्यङोऽपि लोपो द्रष्टव्यो गर्द्दभत्यश्वतीत्यतद्दृतिवचनादेषु सादेर्लोपः अत्रौज.पदस्यौजस्विपरत्वमिति निबन्धारः। गव्यते नाव्यते इत्यादेरपि गौरिवाचरतीत्यादिरर्थः पूर्ववदवादेशः पूर्वमनुन्मना उन्मनोवदाचरति इत्यर्थेऽप्युन्मनायते दुर्म्मनायते अवेहत्, वेहदिवाचरतीत्यर्थे वेहायतीत्यादौ तस्य लुक्। गौर्गर्भघातिनी वेहत् अलोहितो लोहितोभवतीत्यर्थे लोहितायति लोहितायते

स्वरितत्वादुभयपदं सुखमनुभवति इत्यर्थे सुखायते.एवं दुःखायते अलीकायतेइत्यादि । शब्दं करोतीत्यर्थे शब्दायते एवं वैरायते कलहायते । गिलितस्य पुनश्चर्वणं रोमन्थः तं करोतीत्यर्थे रोमन्थायते गौः । मुण्डादेस्तत् करोत्यर्थे गृह्णात्यर्थे कृतादितः । वक्तीत्यर्थे च सत्यादेरङ्भ्यस्त चिरस्यतीति भागुरिस्मृतेः नरं मुण्डयतीत्यत्र नरनिष्ठमुण्डनं जलं मिश्रयतीत्यत्र जलनिष्ठमिश्रणं वासः शिथिलयतीत्यत्र वासोनिष्ठ शैथिल्यम् अन्नं मधुरयति इत्यत्रान्ननिष्ठमाधुर्य्यं चैत्रं मित्रयति इत्यत्र चैत्रनिष्ठमित्रत्वं करोतीत्यादिकोनामप्रकृतिकस्य णेरर्थः । तत्र मुण्डादिपदस्य धर्म्मपरत्वात् मुण्डादिण्यन्तधात्वर्थतावच्छेदकीभूत फलवत्त्वाच्च नरादेः कर्म्मत्वमिति सम्प्रदायविदः । वासः पृथु मृदु भृशं वा करोतीत्यर्थे वासः प्रथयति म्रदयति भ्रशयति इत्यादावृतो रेफादेशः । तथा चैत्रं परिवृढ़यति इत्यत्रापि । कण्ड्वादिभ्यस्तत् करोतीत्यर्थे यगेव नतु णिः तेन गात्रं कण्डूयति कण्डूयते वा इत्यत्र गात्रस्य कण्डुं करोतीत्यर्थः ञित्त्वादुभयपदम् एवं स्वर्गलोके मह्नीं वसतिस्थानं करोतीत्यर्थे स्वर्गलोके महीयते ङानुबन्धेषु पाठादात्मनेपदं शब्दादिभ्यः करोतीत्यर्थे क्यङित्युक्तम् । कृतयति वर्णयतीत्यादौ गृह्णातीत्यादिरर्थः सत्यापयति अर्थापयति वेदापयति इत्यत्र च सत्यं वक्तीत्यादिरर्थः सत्यादिनिकादावागमश्च प्रियं स्थिरं वा वक्तीत्यर्थे प्रापयति स्थापयति इत्यादौ प्रियस्थिरादेः प्रस्थादेशोऽपि अश्वतरं वदतीत्यर्थे अश्वयति इत्यत्र तरप्रत्ययलोपश्च .गोमन्तमाचष्टे इत्यर्थे गवयति गुणवन्तमाचष्टे

इत्यर्थे गुणयति स्त्रग्विणमाचष्टे इत्यर्थे स्रजयति इत्यादौ तु मन्तुवन्तुविनां लुगपि तथा कर्त्तारमाचष्टे इत्यर्थे कारय-तीत्यत्र तृचः अन्तिकमाचष्टे इत्यर्थे नेदयति वाढ़माचष्टे इत्यर्थे साधयति इत्यत्र चान्तिकवाढ़योर्नेदसाधौ च युवान-मल्पं वा वदतीत्यर्थे कनयति युवाल्पयोः कन्वेत्यनुशिष्टेः पक्षे यवयति अल्पयति इत्यपि। स्थूलमाचष्टे दूरमाचष्टे इत्याद्यर्थे स्थूल दूरयुवह्रस्वक्षिप्रक्षुद्राणामन्तस्थादिलोपो गुणश्चेत्यनुशिष्टेः क्रमेण स्थवयति दवयति यवयति क्षपयति क्षोदयति इत्येव प्रयोगः। बहूनाचष्टे इत्यर्थे भूययति बहोर्भूयादेशः। हस्ताद्यङ्गेभ्यस्तन्निरस्यतीत्यर्थेऽपि णिः तेन हस्तं निरस्यती-त्याद्यर्थे हस्तयते पादयते इत्यादि पूर्व्ववदात्मनेपदम्। तूस्तान्निघाते संछादे वस्त्रात्पुच्छादितस्तथा। उत्क्षेपादौ कर्म्मणोणिस्तत्तदव्ययपूर्व्वत इति भागुरिस्मृतेः तूस्तं विनि-हन्तीत्यर्थे वितूस्तयति तूस्तं केशजटा वस्त्रं संछादयती-त्यर्थे संवस्त्रयति पुच्छमुत्क्षिपतीत्यर्थे उत्पुच्छयते गौः एव परिपुच्छयते भाण्डानि समिनोतीत्यर्थे संभाण्डयते भिक्षुः चीवरं सम्मार्ज्जयीत्यर्थे सञ्चीवरयते। कर्म्मण इत्युक्तेस्तू-स्तेन विनिहन्तीत्याद्यर्थे न णिः तूस्तयति प्रतूस्तयति इत्यादितः कथितार्थानामप्रतीतेस्तत्तदव्ययपूर्व्वकत्वनियमः। वीणात उपगाने स्याद्धस्तितोऽतिक्रमे तथा। सेनातश्चाभि-याने णिः श्लोकादेरप्युपस्तुताविति भागुरिस्मृतेरत्रापि तत्तदव्ययपूर्व्वत इत्यनुषज्यते। तथाच वीणया उपगायती-त्यर्थे उपवीणयति यशः हस्तिनातिक्रामतीत्यर्थे अतिहस्त-यति गृहं सेनयाभिमुखं यातीत्यर्थे अभिसेनयति समरं

श्लोकैरुपश्लोकयतीत्यर्थे उपश्लोकयति शिवमित्यादिकः प्रयोगः। कर्म्मण्यत्ययेतूपवीणयते यशइत्यादि वीणादेः करणतास्थलएवायं विधिरतो वीणायामुपगायतीत्याद्यर्थे न णिः साधुः। अशनधनाभ्यामाय उदकान्नः कलोपश्च तदिच्छतीत्यर्थे तेन अशनायति धनायति उदन्यतीत्यादावशनमिच्छतीत्यादिरर्थः। अशनायादिकं धात्वन्तरमित्यपि वदन्ति। चैत्रं भावयति आत्मानं गमयति इत्यादौ धातुप्रकृतिकस्य णेरप्यनुकूलव्यापारो व्यापारमात्रं वार्थः तत्र धात्वर्थस्यानुकूलतायाः संसर्गविधयापि भानसम्भवात् तेन तत्र चैत्रोत्पत्त्यनुकूलव्यापारवान् आत्मगत्यनुकूलव्यापारवानित्यादिरर्थः। क्वचिज्ज्ञानानुकूलव्यापारोऽपि णार्थः यथा कथकः कंसं घातयति इत्यादावभिनयादिरूपः। चुरादिभ्यस्तु स्वार्थिकस्य णेः स्वरूपमर्थः तेन चोरयति चिन्तयति इत्यादौ स्तेयादिस्वरूपस्यानुकूलकृतिमानित्यादिरर्थः। गुपूधूपविच्छिपणिपनेरायः कमेस्तु णिङ्। ऋतेरीयङ् चतुर्लेषु नित्यं स्वार्थे परत्र वेति भागुरिः। स्वार्थे स्वरूपार्थे तेन गोपायतीत्यस्य रक्षणस्वरूपं धूपायति इत्यस्य सन्तापस्वरूपं विच्छायतीत्यस्य गतिस्वरूपं पणायते इत्यस्य व्यवहारस्वरूपं स्तुतिस्वरूपं वा करोतीत्यर्थः। आकर्णयामास न वेदनादात्तचोपलेभे वणिजां पणाया इति व्यवहारार्थे भट्टिः। पणायते इत्यस्य तु स्तुतिस्वरूपं करोतीत्येवार्थः स्वरूपार्थकत्वात् अत्यापि विप्रगोपाया स्वर्गानन्त्यप्रदा भवेदित्यादिकः प्रयोगः अत्यादेः क्रियाविशेषणत्वे क्लीवत्वापत्ते

इत्युक्तप्रायं स्वर्गं कामयते इत्यस्य स्वर्गगोचरेच्छास्वरूप-वानित्यर्थः ङानुबन्धत्वादात्मनेपदम् ऋतीयते इत्यस्य घृणास्वरूपं करोतीत्यर्थः। परत्र वेत्युक्तेः सनुत्पत्तेःकारादन्यत्र गोप्ता गोपायिता कमिता कामयिता अर्त्तिता ऋतीयिता इत्यादिको द्विविधः प्रयोगः गुपो बधेश्च निन्दायां क्षमा-याञ्च तथा तिजः। प्रतीकाराद्यर्थकाच्च कितः स्वार्थे सनो विधिरिति भागुरिः तेन जुगुप्सते वीभत्सते इत्यत्र निन्दा-स्वरूपस्य कर्त्ता इत्यर्थः अतएव जुगुप्सा स्वल्पापि चपयति महत्त्वं परिषदीत्यादिकः प्रयोगः तपस्तितिक्षते इत्यस्य तपःकर्म्मकसहनस्वरूपस्य कर्त्तेत्यर्थः चिकित्सत्यातुरमित्य-स्यातुरकर्म्मकप्रतीकारस्वरूपं करोतीत्यर्थः रिपुं विचिकि-त्सतीत्यस्य रिपुकर्म्मकनिग्रहस्वरूपं करोतीत्यर्थः विचि-कित्सति मन्मन इत्यादौ च मन्मनः सन्देहस्वरूपवदित्यर्थः। एषामर्थान्तरे तिङो नाभिधानमिति भागवृत्तिः तेन संगो-पननिशाननिवासाद्यर्थेषु गोपनं तेजनं केतनमित्यादिक-मेव प्रत्युदाहरणं मानदानशानृभ्योऽपि स्वार्थे सन् तेन मान् पूजायां विचारे वा इत्यस्य मीमांसते दान खण्डने इत्यस्य दीदांसते शान तेजने इत्यस्य शीशांसते इत्यत्रा-प्युक्तदिशैवान्वयः। पाकं चिकीर्षति ओदनं बुभुक्षते इत्या-दाविच्छैव सनोऽर्थः तस्याञ्च द्वितीयान्तेन लभ्यस्य पाका-दिविशेष्यताकत्वस्य स्वरूपसम्बन्धेन धात्वर्थस्य तु कृत्यादेः स्वसाध्यत्वादिप्रकारिनिष्ठस्वसमानकर्तृकत्वसम्बन्धेनान्वयात् पाकधर्म्मिका निरुक्तसम्बन्धेन कृतिमती या इच्छा तद्वा-नित्यादिरर्थः समानकर्तृत्वस्य निवेशात् अन्यदीयकृति

पाकादाविच्छावतत्वं चिकीर्षति पिपक्षति इत्यादिकोन प्रयोगः इति चिन्तामणिकृतः । सोऽन्दडस्तु पाकं चिकीर्षतीत्यादौ द्वितीयार्थस्य विषयत्वस्य मूलधात्वर्थ एवान्वयः तदर्थस्य तु समानकर्तृकत्वविषयत्वाभ्यां सनर्थेच्छायां तथाच पाकविषयताकक्रतिसमानकर्तृकतद्गोचरेच्छावान् इत्यादिरेवार्थः कारकविभक्तेः क्रियायामेव स्वार्थबोधकत्वादत एव गृहं तिष्ठासतीत्यादिकोन प्रयोगः स्थितेर्गृहकर्म्मकत्वबाधात् अन्यथा गृहधर्म्मिकां स्थितिप्रकारकेच्छां बोधयत्वमेव प्रमाणं स्यात् नतु गृहे तिष्ठासतीत्यादिरिति प्राह । चिकीर्षादेः प्रवृत्त्यादिरूपेष्टसाधनत्वेन तद्गोचरेच्छासत्वेऽपीच्छार्थकसनन्तात् न सन्प्रत्ययः सनन्तान्न सनिष्यते इत्यनुशिष्टेरतश्चिकीर्षिषतीत्यादिको न प्रयोग' । पापच्यते इत्यादौ यङः पौनःपुन्यमर्थः तच्च प्रकृतधात्वर्थजातीय क्रियोत्तरतादृशक्रियानन्तर्य्यरूपं प्रकृत्यर्थे विशेषणत्वेनान्वेति तेन पाकोत्तरपाकानन्तर्य्यवत् पाककर्त्ता इत्येव तत्र वाक्यार्थः । द्विः पक्तरि पुनः पक्तृत्वेऽपि न निरुक्तं पुनः पुनः पक्तृत्वम् अतोन तत्र पापच्यते इति प्रयोग' पाकोत्तरत्वादिकञ्च तत्समानकर्तृत्वगर्भं बोध्यम् अतः पुमन्तरीय पाकाद्युत्तरत्वमादाय नातिप्रसङ्गः । तण्डुलं पापच्यते इत्यादौ यङन्तधातूपस्थाप्ये सर्वत्रैव पाकादौ तण्डुलकर्म्मत्वस्यान्वयो व्युत्पत्ति वैचित्र्यात् नातः क्रमेण मुद्गमाषौ पक्त्वा तण्डुलस्य पक्तरि तथाविधप्रयोगः तुषेण पापच्यते इत्यादौ कारकान्तरमप्येतेन व्याख्यातं जंगम्यते चङ्क्रम्यते इत्यादौ धात्वर्थगतं पौनःपुन्यमिव कौटिल्यमपि यङोऽर्थ

न्तत्रार्थात कौटिल्य एव तद्विधानात् तेन पुनः पुनः कुटिल॰ गतिमान् इत्येवं तत्र बोधः शेषं पूर्ववत्। लोलुप्यते चंचूर्य्यते जंजप्यते दंदश्यते जेगिल्यते इत्यादौ निन्दितत्वमपि तेन पुनः पुनर्गर्हितं लुम्पति चरतीत्यादिकस्तत्वार्थः। अत्रोत्सर्गत एव एकाचोहलादेरेव धातोर्यङ् विधानात् पुनः पुनः कथयति जागर्त्ति दरिद्रातीत्याद्यर्थे कथ्यादेर्न यङ्नापि पुनः पुनरेति एजते इत्यादावित प्रभृतेः ऋप्रभृतिभ्यश्चेति विशेषविधेस्तु पुनः पुनरियर्त्ति अश्नाति अटतीत्याद्यर्थे अरार्य्यते अशाश्यत आटाट्यते इत्यादिकः प्रयोगः शुभिरुचिभ्यां तु न स्यात् पुनः पुनः शोभते रोचते इत्यर्थे शोशुभ्यते इत्यादेर्निराकाङ्क्षत्वादिति वदन्ति।

तद्धितं लक्षयति।

विभक्त्यादितिकादन्यः प्रत्ययस्तद्धितं मतम्।
नामप्रकृतिको नैवमतिव्याप्त्यादिदोषतः।

विभक्तिधात्वंशकृत्प्रत्ययोऽन्यः प्रत्ययस्तद्धितं बृचक इत्यादौ क्रस्वाद्यर्थकः कादिरपि तद्धितमेव तदन्यत्वेनापि प्रत्ययं विशेषयन्त्यन्ये नामप्रकृतिकप्रत्ययत्वन्तु न तद्धितस्य लक्षणं विभक्तौ क्यजादौ चातिव्याप्तेः पचतितरामित्यादौ तरामाद्यव्याप्तेश्च।

विभजते।

तस्यापत्यं तद्विशेषस्तद्वक्षेण युतेन्दुमान्।
कालस्तथा तेन रक्तं तस्य पुत्रोऽथ वेत्ति तत्।
अधीते वा देवतास्य सैरमादीन् यथायथम्।
बोधयद्विविधानर्थांस्तद्धितं स्यादनेकधा।

तस्यापत्यस्य विशेषो गुर्वायत्तत्वप्रथमत्वादिः।
अपत्यार्थं व्याकुरुते।

अण् नाम्नोऽपत्यसामान्ये षष्ठ्यन्ताद्वाधकं विना।
अदन्तादिञ् निषादादेरन्त्याचोऽक चेष्यमेप्सितम्॥

षष्ठ्यन्तान्नाम्नः साक्षात्परम्परासाधारणापत्यसामान्ये बोध्ये अण् इत्युत्सर्गः स च मरीचेरपत्यं मारीचः काश्यपिरित्यादौ अपत्यविशेषभाने तु तद्धितभेदो वच्यते मरीचिना अपत्यमित्यर्थे तु न षष्ठ्यन्तं नाम। अणो बाधकमाह अदन्तादिति अदन्तान्नाम्नो बाधकं विना इञेव दक्षस्यापत्यं दाक्षिः अस्यापत्यमिः इत्यादौ तत्रापि निषादादेरिञा अपत्यबोधने तदन्तिमाचोऽगादेशोऽपेक्षितः यथा नैषादकिः वैयासकिः चाण्डालकिरित्यादौ।

इञोऽपवादमाह।

शिवादिभ्यस्त्वणेव स्यात् ष्योऽगर्गादेर्गणात्तथा।
कुञ्जादेरायनण् ष्यश्च तस्माच्चैव स्त्रियामिति॥

शिववरुणककुत्स्थ पुत्रप्रभृतिभ्योऽणेव नत्वदन्तादिञ् मुनिषु वशिष्ठादिवृष्णिषु वसुदेवादिः कुरुषु नकुलादिश्च शिवादौ पाठ्यः तेन वाशिष्ठो वासुदेवः साहदेवः नाकुल इत्यादिरेव तत्र प्रयोगः शतानीकस्तु नाकुलिरित्यादौ क्वचिदपवादविषयेऽप्युत्सर्गविधिः प्रथमापत्यं वा तत्रार्थः। गर्गस्यापत्यमित्यर्थे गर्गादिगणात् ष्यः यथा गार्ग्यः काठ्यः वात्स्यः पाराशर्य्यः कार्त्तवीर्य्यः जामदग्न्यः इत्यादौ अत्र गणादिवृत्ते गर्गो नाम कश्चित् तस्यापत्यमित्यर्थे गार्गिरित्येव एवमग्रेऽपि। कुञ्जादेर्गणादपत्यसामान्ये आयनण्

तदुत्तरं ष्यञ्चास्त्रियां यथा कौञ्जायन्यः ब्राध्नायन्यः इत्यादौ स्त्रियान्तु कौञ्जायनीत्येव नतु ततोष्यः सुमङ्गलादित्वात् ङीप् । अत्रास्त्रियामित्येवहुत्वस्याप्युपलक्षकं तेन कौञ्जायनाः पुमांस इत्यत्रापि न ष्यः । गार्गिः कौञ्जिरित्यादौ नापत्यत्वेन बोधः किन्तु प्रथमापत्यत्वेनेति वक्ष्यते ।

अदन्ताच्छिल्पिनोण्योवा सेनान्ताल्लक्षणादपि ।
नडादेर्णायनोनित्यं बाह्वादेस्त्विञ् विधीयते ।

तान्तवाय्यस्तान्तवायिः कौम्भकार्य्यः कौम्भकारिरित्यादौ शिल्पिवाचकात् महासैन्योमहासैनिरित्यादौ च सेनान्तात् लाक्षण्योलाक्षणिरित्यादौ लक्षणशब्दादिञि प्राप्ते विभाषया ष्यः तथा नडादेर्णायनोनित्यं तेन नाडायनः चारायण इत्यादौ कुञ्जाद्यन्तर्गतोनडादिः बाह्वादेस्त्विञ् यथा बाहोरपत्यं बाहविः सुमित्राप्रभृतयस्तु बाह्वादिगणे द्रष्टव्याः ।

अणोऽपवादान्तरमाह ।

स्त्रीप्रत्ययान्तादत्यादेरप्येयण् पारिभाषिकात् ।
न नदीमानुषीनाम्न आदावाद्द्विवर्जितात् ।

विनतायाः सौपर्ण्याः कमण्डल्वाः युवत्या वाऽपत्यमित्यर्थे वैनतेयः सौपर्णेयः कामण्डलेयः यौवतेयइत्यादौ स्त्रीप्रत्ययान्तादेयण्येव नत्वण् अत्रेरपत्यमित्यर्थे आत्रेयः अतिपदमप्रत्ययेदन्तद्विस्वरनाम्नि पारिभाषिकं तेन शौचेयः हारेयः आग्नेय इत्यादिकः प्रयोगः । विद्यादिकं द्विस्वरमपि नाप्रत्यये दन्तं मरीच्यादिकमप्रत्ययेदन्तमपि न द्विस्वरमतोवैद्योमारीचइत्यादौ न प्रसङ्गः स्त्रीप्रत्यया-

न्ताद्यणादावादृ,त्ति वर्ज्जिताद् नदीमानुषीनाम्नोनैयण् यथा यामुनः सैप्रः सारस्वतः इत्यादौ यथा वा सौभद्रः कौशल्य-इत्यादौ आदावादृ,त्तिमतस्तु तादृशनाम्नो यथा प्राप्तमैयस्येव यथा जाह्नवेयः द्रौपदेयः कौशलेयः इत्यादौ।

तथा।

सुभगादेरिनादेशोऽप्यन्तस्यैयणि नित्यशः।
कुलटायाविकल्पेन सती यदि भवत्यसौ।

सुभगाप्रभृतेरैयणन्तस्वरस्य नितरामिनादेशोयथा सुभगाया अपत्यमित्यर्थे सौभागिनेयः दौर्भागिनेय पारस्त्रैणेय इत्यादौ सौहार्दवदिहोभयपदस्य वृद्धिः। सुभगा दुर्भगा चैव परस्त्री बन्धकी तथा। मध्यमा च कनिष्ठा चेत्यादिकः सुभगागणः। कुलटा तु यदि सती तदा तदन्तस्वरस्यैयणि विभाषया इनादेशो यथा कौलटिनेयः कौलटेय-इत्यादौ यदि त्वसती तदा कौलटेयइत्येव प्रयोगः।

तथा।

शीलेनाङ्गेन वा हीनाम् स्त्रियाश्चादादितस्तु वा।
एरण् स्याच्चटकायास्तु नित्यमेरण् स्त्रियान्तु लुक्।

शीलेन हीनानां दास्यादीनाम् अङ्गेन हीनानां काणादीनाञ्च स्त्रीप्रत्ययान्तानामेरण् वा स्यात् यथा दास्या अपत्यं दासेयः दासेरः यथावा काणाया अपत्यं काणेयः काणेरः कुलटापरङ्गहीना चेत् कौलटेरइति चटकायास्त्वपत्यमित्यर्थे नित्यमेरण् नत्वैयणपि यथा चाटकेरः चटकास्त्वपत्ये तु तस्य लुक् तेन चटकेत्येव तत्र प्रयोगः।

तथा।

तिकादेरायनिञ् नित्यं तदादेस्तु विभाषया।
ईयः स्वसुः स च व्यञ्भ्रातुर्य्यः श्वशुराद्भवेत्।

तिकस्यापत्यमित्यर्थे नित्यमायनिञ् यथा तैकायनिः कौशल्यायनिरित्यादौ कौशल्यायनिवल्लभामिति भट्टिः। स च तदादेः सर्व्वनाम्नोवैकल्पिकः यथा तस्यापत्यमित्यार्थे तादायनिः तादः यादायनिः यादइत्यादौ स्वसुरपत्यमित्यर्थे स्वस्रीयः भ्रातुरपत्यमित्यर्थे भ्रात्रीयः भ्रातृव्यः द्विष्टरि तु भ्रातृव्यशब्दोरूढ़एव तदुक्तं भ्रातृव्यौ भ्रातृजद्विषाविति श्वशुरस्यापत्यमित्यर्थे यः श्वशुर्य्यः।

तथा।

कुलाद्य एयकञ्चीनः सपूर्व्वात् केवलादपि।
महाकुलादञीनञ् च दुष्कुलादेयञोविधिः।

कुलस्यापत्यमित्यर्थे यः एयकञ् च स्यात् यथा कुल्यः कौलेयकः सपूर्व्वात् केवलाच्च कुलादीनः स्यात् यथा आढ्यकुलीनः कुलीनइत्यादौ महाकुलादञ् ईनञ् च स्यात् यथा माहाकुलो माहाकुलीनः दुष्कुलादेयञ् यथा दौष्कुलेयः। केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम्। हृतां महाकुलीनस्य तस्य लिप्सामहे वयमिति भट्टिः। कथ महाकुलीनो दुष्कुलीनः सपूर्व्वादीन् महदादेः कुलीनान्वय इत्यन्ये।

देशर्व्वात्रिययोरूढ़ाद्राज्ञ्यपत्येऽप्यञोविधिः।
नादेः कुरोः कोशलाच्च व्यस्तथेदन्ततोप्यऽसौ।

देशे चत्रिये च प्रत्तानाम्नो राजन्यपतर्‌यार्थे अणोविधिः यथा पञ्चालानां राजापत्यं वा इत्यर्थे पाञ्चालः एवं वैदेहः एवं ऐक्ष्वाकः। क्वचिदणादावपुत्रवर्णस्य लोपः नकारादित्वरूढात् कुरुतः कोशलाच्च तादृशार्थे ण्यएव यथा नैषध्यः कौरव्यः कौशल्यः इत्यादौ। कथं हिरण्मय हंसमबोधि नैषधः परिरेभिरे कुकुरकौरवस्त्रिय इति यदि तस्येदमित्यत्र। इदन्तादपुत्ररूढात ण्यः यथा कौन्त्यः आवन्त्यः इत्यादौ कथं कौन्तेयः कुन्तीशब्दात् स्त्रीप्रत्ययान्तात् एयण्। स्त्रियान्तु कुन्त्यवन्तिकुरुभ्योण्यस्य लुगेव यथा कुन्तीनां स्त्र्यपत्यमित्यर्थे कुन्ती एवमवन्ती कुरुः। कम्बोजादेरपि रूढादपत्ये राजनि च विहितस्याणो लुगेव यथा कम्बोजानामपत्यं राजा वा इत्यर्थे काम्बोजश्चोलः केरल इत्यादौ।

संख्यासंभद्रपूर्व्वाया ङुरण्मातुः स्त्रियाञ्च ङीप्।
गोर्यो वत्सः यमादित्यादितिभ्यः स्याद्दितेरपि।

द्वयोर्म्मात्रोरपत्यमित्यर्थे द्वैमातुरः त्रैमातुरः षाण्मातुरः शक्तिधरः कुमार इत्यमरः साम्मातुरः भाद्रमातुरः स्त्रियान्तु तदन्तात् ङीप् द्वैमातुरीत्यादि गोरपत्यमित्यर्थे य एव गव्यो वत्सः। एवं यमस्यापत्यं याम्यः आदित्यस्यापत्यमादित्यः अदितेरपत्यमित्यर्थे आदित्यः दितेरपत्यं दैत्यः इत्यादौ ण्यएव कथमादितेयः दैतेयः आदितिदितिभ्यां स्त्रीप्रत्ययान्तत्वादेयण्।

अपत्यम्।

…पत्यप्रत्ययान्तात् स्यादपत्यप्रत्ययः पुनः।
गुर्व्वायत्ते त्वपत्ये स्यात् पुनर्यूनीति लक्षिते॥

उपगोरपत्यस्यापत्यमित्यर्थे औपगवादिपदेभ्योना-
पत्यप्रत्ययः अतएव एकोगोत्रे इति पाणिनिरप्याह एकः
केवलोऽपत्यप्रत्यय विना अतएव शब्दो गोत्रेऽपत्यसामान्ये
विहितप्रत्ययस्य साकाङ्क्ष इति तदर्थः पुनर्यूनीतिविध्य-
न्तरसत्त्वादेव चौपगवस्य गुर्व्वायत्तापत्यमित्यर्थे औपगविः
गार्ग्यायण इत्यादौ पुनरपत्यप्रत्ययः गुर्व्वायत्तं यत् प्रशस्तं
तदपत्य युवोच्यते इति वृद्धा.।

यञन्ते चान्तादायनण् स्यात् कौञ्जायन्यादिवर्ज्जितात्।
गुर्व्वायत्ते केवलाच्च द्रोणादेष विभाषया॥

यञन्तादिञन्ताच्च गुर्व्वायत्तापत्यस्य बोधने आयनण्
स्यात् यथा गार्ग्यस्य गुर्व्वायत्तापत्यमित्यर्थे गार्ग्यायणः
वात्स्यायन. दाचायण इत्यादौ। यञन्तादपि कुञ्जादि-
गणाच्चासौ तेन तत्र कौञ्जायन्योऽयमित्यादिरेव प्रयोगः।
केवलादपत्यप्रत्ययशून्यादपि द्रोणादायनण् यथा द्रोणस्य
प्रशस्तापत्यं द्रौणायनोऽश्वत्थामा विभाषयेत्युक्तेः पक्षे
द्रौणिरित्यव।

गर्गादेरपि कुञ्जादेः प्रथमापत्यबोधने।
इञेव स्यान्न तु यञः स्याच्चायनण् स्यादिति स्थितिः॥

गर्गस्य प्रथमापत्यमित्यर्थे गार्गिर्व्वात्सिरित्यादौ न
यञः किन्त्विञेव तथा कुञ्जस्य प्रथमापत्यमित्यर्थे कौञ्जि-
र्मौञ्जिरित्यादावपि नायनण्।

अपत्यविशेषः।

तद्युक्तेणेन्दुमत्काले तन्नक्षत्रादणोविधिः।
नक्षत्रद्वन्दतस्त्वीयः कथितार्थे विधीयते।

पुष्येण सहेन्दुमदित्यर्थे पौषं दिनं पौषी रात्रिः एवमाश्विनं श्रावणं कार्त्तिकमित्यादौ। तद्युक्तेणेन्दुमत्काल-इत्येव नातः पुष्येण सहेन्दुमत् पुरमित्यर्थे पौषं पुर-मित्यादिकप्रयोगः नक्षत्रद्वन्द्वात् कथितार्थे अणोबाधक ईय एव यथा पुष्यपुनर्वसुभ्यां सहेन्दुमद्दिनं पुष्यपुनर्वसवीयम् एवमश्विनीभरणीया रात्रिरित्यादिप्रयोगः।

नक्षत्रेण युतेन्दुमत्।

तद्रागयुक्तत्यर्थे तस्मादण् स्यादिकण् पुनः।
लाक्षातोरोचनातश्च शकलात्कर्दमात्स्म वा।

हरिद्राया रागयुक्तमित्यर्थेऽण् यथा हारिद्रं वासः एवं कौसुम्भं लाक्षया रक्तमित्यर्थे नित्यमिकण् यथा लाक्षिकं रोचनिकं शकलकर्दमाभ्यां तेन रक्तमित्यर्थे विभाषयेकण् यथा शाकलिकः शाकलः कार्दमिकः कार्दमः इत्यादौ।

तथा।

नीलादः कस्तथा पीतात् त्रिलिङ्गादपि नित्यशः।
स्वभावरक्ते गौण्या तु वृत्त्या तद्धितमुच्यते :

नीलेन नीलया वा रक्तमित्यर्थे नित्यमप्रत्ययो यथा नीलः पट इत्यादौ पीतेन पीतया वा रक्तमित्यर्थे तु नित्यं कप्रत्ययो यथा पीतकः पट इत्यादौ हारिद्रः कुक्कु-टपादः लाक्षिकमधरं पीतकं स्वर्णमित्यादौ स्वभावसिद्ध-पीतादौ गौणवृत्त्या हरिद्राद्यैरक्तसदृशे तद्धित प्रयुज्यते।

तेन रक्तम्।

तेषां समूह इत्यर्थेऽप्यण् पाशादेस्तु यः स्त्रियाम्।
गर्गादिगोत्रादुक्षादेश्चाकस्त्रीयस्तु चाश्वतः।

काकानां समूहः काकम् एवं शुकानां शौकं भिक्षाणां भैक्षं युवतीनां समूह इत्यर्थे यौवतमिति जयादित्यः। तद्धितानपत्यस्वरे पुंवद्भावात् यौवनमिति तु भागवृत्तिः अतएव यमुपास्ते पुण्यभाजं कलाकुशलयौवनम्। सरस नितम्बस्तन्वि सफलं तस्य यौवनमिति तन्मते प्रयोगः। पाशानां समूह इत्याद्यर्थे तु तेभ्यो यएव तदन्तश्च स्त्रीलिङ्ग एव यथा पाश्या धूल्या वात्या वन्या शत्येति खलरथावपि पाशादौ पठन्ति यथा खल्या रथ्या इति। तथा गर्गादिगोत्रेभ्यः समूहेऽकण् गार्गकं दाक्षकमित्यादौ उक्ष्णां समूह इत्यर्थेऽप्यसौ यथा औक्षकम् औष्ट्रकमित्यादौ। उक्षोष्ट्रोरभ्रवत्साजा राजा राजन्यकस्तथा। राजपुत्रो मनुष्यश्च वृद्ध उक्षादिको गणः। अश्वानां समूहे स्त्रीयो विभाषया यथा अश्वीयमाश्वमिति।

धेनोरनञः कण्नित्यं केदाराद्यण्स्विकस्त्वकण्।
पिष्टात् क्वचिद्धस्तिभ्याञ्चेकण् केशादिकण् यणौ।

धेनूनां समूहो धैनुकम् अधेनोस्त्वाधेनवमित्यणेव अस्मादेवानञ इति निषेधात् सामूहिकप्रत्ययेषु तदन्तविधिरेष्टव्यः तेन सुन्दरगर्गाणां समूह इत्यर्थे सौन्दरगार्गकमित्यादि साध्विति शाब्दिकाः। केदाराणां समूह इत्यर्थे यणि कैदार्य्यम् इकणि कैदारिकम् अकणि कैदारकम् इति त्रिधा प्रयोगः। पिष्टार्थकात् क्वचितो हस्तितश्चेकण् यथा

पूपानां समूहः पौपिकं शाष्कुलिकं तथा कवचिनां समूहः कावचिकं हस्तिनां हस्तिनीनां वा समूहो हास्तिकम् । केशानां समूहे ष्ठिकण् यण् च कैशिकं कैश्यम् ।

इनिः खलोलूकपद्मादेरथात् कड्यः स्त्रियामिमौ ।
गणिकातोब्राह्मणाच्च मानवाद्वाडवाच्च यण् ।

खलादित्रिकादिनिः समूहे यथा खलिनी उलूकिनी पद्मिनी । तथा रथात् कड्यः यथा रथकड्येति इमौ च प्रत्ययौ स्त्रियामेव । गणिकादिभ्यस्तु समूहे यण् यथा गाणिक्यं ब्राह्मण्यं मानव्यं वाडव्यमिति ।

गजबन्धुजनग्रामसहायेभ्यस्तु तं स्त्रियाम् ।
पृष्ठाद्यत् क्लीवलिङ्गं तत् चरणेभ्यस्तु धर्म्मवत् ।

गजता बन्धुता जनता सहायता इत्यत्र गजादीनां समूहेऽर्थे तप्रत्ययः सच स्त्रीलिङ्ग एव । पृष्ठात् समूहे यत यथा पृष्ठ्यं तच्च क्लीवलिङ्गमेव अतएवास्य पाशादित्वनन्त्यभावः चरणेभ्यस्तु समूहे धर्म्म इव प्रत्ययाः स्युः यथा कठानां धर्म्मः काठकं तथा समूहोऽपि एवं छान्दोग्यमाथर्वणमित्यादि ।

तत्समूहः ।

तद्वेत्ति तदधीते वेत्यर्थेऽप्यण् क्रतुवाचिनः ।
सूत्रान्तादप्यकल्पादेरुक्थादेश्च कणोविधिः ।

निमित्तं वेत्तीत्यर्थे नैमित्तः एवमौत्पातः मौहूर्त्तः छन्दो वेत्त्यधीते वेत्यर्थे छान्दसः वैयाकरणः क्रतुवाचिनोऽग्निष्टोमादेष्ठिकण् यथा अग्निष्टोमं वेत्ति अधीते वा आग्निष्टोमिकः अकल्पादेः सूत्रान्तशब्दादप्युक्तार्थे इकण् यथा वार्त्तिकसूत्रिकः सांख्यसूत्रिकः कल्पादेस्तु सूत्रात्

काल्पसूत्र इत्यादीव। उक्थं वेत्त्यधीते वा इत्यर्थेऽपत्यौक्थिकः नैयायिकः पातञ्जलिकः लोकायतं बौद्धशास्त्रं तद्वेत्त्यधीते वा लोकायतिक इत्यादि।

विद्यान्तादङ्गधर्म्मत्रिचत्रानुत्तरवर्त्तिनः।
तथैकण् शतषष्टिभ्यां परस्य तु पथष्टिकः।

वायसविद्यां वेत्त्यधीते वा वायसविद्यिकः सर्पविद्यिकः चारविद्यिकः। अङ्गाद्यनुत्तरवर्त्तिनः किम् आङ्गविद्यः ज्योतिर्विद्यः गान्धर्वविद्यः धार्म्मविद्यः चात्रविद्यः त्रयश्चवा विद्या त्रिविद्या तां वेत्त्यधीते वा त्रैविद्य इति कर्म्मधारयत्वादण्। त्रैविद्या मां सोमपाः पूतपापा इति गीता। तिस्रो विद्या वेत्तीत्याद्यर्थे तु द्विगुतस्तद्धितस्य लुकि त्रिविद्य इत्येवम्। शतपथं षष्टिपथं वेत्तीत्याद्यर्थे टिकः शतपथिकः षष्टिपथिकः स्त्रियान्तु शतपथिकीत्यादि।

क्रमादिभ्यः कएव स्यात् पदात कः स्यादिकस्तथा।
सर्व्वादेरथ साद्यादेर्वेत्तीत्याद्यर्थकस्य लुक्।

क्रमं वेत्तीत्याद्यर्थे क्रमादिभ्यः कएव यथा क्रमकः सामकः शिक्षकः मीमांसक इत्यादौ। पदात्तु कः स्यादिकोऽपि यथा पदकः पदिकः। सर्व्वादेः साद्यादेश्च शब्दाद्विहितस्य वेत्त्यधीते वेत्यर्थकस्य तद्धितस्य लुगेव यथा सर्व्वं वेदं वेत्तीत्याद्यर्थे विहितस्याण् प्रभृतेः सर्व्ववेदः सर्व्वतन्त्र इत्यादौ सादिवार्त्तिक इत्यादौ चेति।

अष्टाध्यायादितः कः स्यादध्यायस्य च लुक् तथा।
अध्यायसङ्ख्यार्थकस्माद्वेत्त्याद्यर्थस्य लुक् परे।

अष्टावध्याया यस्य तदष्टाध्यायसूत्र तद्वेत्त्यधीते वेत्यर्थे

कः अध्याय पदस्य च लुक यथाष्टकाः पाणिनीयाः पञ्चकाः गौतमीयाः दशकाः व्याघ्रपदीयाः द्वादशकाः जैमिनीयाः परे पुनरष्टावध्यायसङ्ख्या यस्य इत्यर्थे कप्रत्ययं कृत्वा तद्वेत्त्याद्यर्थे कस्य तद्धितस्य लोपमाहुः ।

तद्वेत्त्यधीते वा ।

तस्येदमिति सम्बन्धिन्यपि तस्मादणोविधिः ।
स्वराजपरदेवेभ्यः कादिरीयोजनादपि ।

तस्येदमित्येवं तत्सम्बन्धिन्यर्थे तदर्थकादण इत्युत्सर्गः । यथा वृक्षस्येदं वार्क्षं ध्रुवं दाशेदमित्याद्दि । स्वस्येदमित्याद्यर्थे तु स्वराजादिभ्यः कादिरीयो यथा स्वकीयं राजकीय परकीयं देवकीयं जनकीयमिति । स्वतः कस्यानित्यत्वं अतएव स्वीयं यदन्यभिन्नं पदमिति मणिदीधितिरिति वदन्ति ।

इयस्त्यदादेर्भवतस्तत्र तोदङ्कस्यपि ।
परावरादितोऽप्यर्द्धात् यदिकस्यपि दिक्परात् ।

त्यस्येदमित्याद्यर्थे त्यदादिगणादीयः यथा त्वदीयं तदीयं मदीयं इदमीयमित्यादि । भवतस्तु तत्रदादेरीये परतः तस्य दादेशोऽपि यथा भवदीयं नये स्वरे तद्धित इति पदान्तविधेर्निषेधादस्य विधिः । शत्रन्तस्य तु भवतस्तस्येदमित्यर्थे भावतमित्यस्येव । परायुत्तरवर्त्तिनोऽर्द्धादपि न केवलाच्च तस्मात् परार्द्धस्येदमित्यर्थे यदेव । यथा परार्द्ध्यं अवरार्द्ध्यं आद्यं आदिपदात् उत्तरार्द्ध्यं अधमार्द्ध्यं दिग्वाचिपूर्वकात् पुनरर्द्धात् यदिकस्यपि यथा पूर्वार्द्ध्यं पौर्वार्द्धिकं दक्षिणार्द्ध्यं दाक्षिणार्द्धिकमित्यादि ।

युष्माकास्माकभावान्ते वाखीनञ् युष्मदस्मदोः ।
तवेत्यस्मान्ममेत्यस्मादखीनस्यपि कादिम ।

युवयोर्युष्माकं वा इदं आवयोरस्माकं वा इदमित्यर्थे युष्मदस्मदोर्युष्माकास्माकभावोत्तरमखीनञ् च वा स्यात् यथा यौष्माकं यौष्माकीणम् आस्माकमास्माकीनम् । आस्माकन्तिसान्निध्यवामनीभूतभूरुहः । पक्षे त्यदादित्वादीयो यथा युष्मदीयमस्मदीयमिति । तवेदं ममेदमित्यर्थे तवममेत्यनयोरखीनस्यपि कादिकः स्यात् यथा तावकं तावकीनं स्वरूपनिर्द्देशान्न त्वदादेशः । अपिना त्यदादित्वादीयोऽपि यथा त्वदीयं मदीयमिति ।

कस्यारण्याद्धस्तिवर्त्मे विहाराध्यायमानुषे ।
नित्यं वा गोमयेऽन्यत्र यः सदा स्यादितिस्थितिः ।

अरण्यस्यायं हस्तीत्याद्यर्थे अरण्यान्नित्यं कञ् यथा आरण्यकः करी पन्था विहारो मानुषश्च अध्यायस्त्वरण्यगीतत्वादारण्यकः । गोमये त्वरण्यस्येदमित्यर्थे आरण्यकमारण्यं वा गोमयमिति द्विधा प्रयोगः । कथितेभ्योऽन्यस्मिन्नर्थेऽरण्यान्नित्यं णप्रत्यय एव यथा अरण्यस्येयमित्यर्थे आरण्या लता आरण्यः पशुरित्यादि ।

तस्येदम् ।

कञ् तत्र भवइत्यर्थे पदादुत्सर्गतोभवेत् ।
ग्रीवात एयञ् वा तत्र ग्रैव ग्रैवेयमित्यपि ।

भव इत्यस्य उत्पत्तिर्वर्त्तमानत्वे इत्यर्थौ यथायथम् ।

आदेर्मध्यात्तादर्थ्यार्थे मोऽधमः मध्य लुक् तथा ।
डिमोऽग्रपश्चादन्तेभ्यः कालार्थात्तु पदादिकञ् ।

आदौ भवः आदिमः भवो वर्त्तमान इति वर्द्धमान-वृत्ति। मणिर्विराजते तस्य तवायं हारमध्यमः। अधो भव इत्यर्थेऽधमः सलोपादधम। यदङ्गमधमं तस्य स्पर्शनं दुरितावहमिति स्मृतेः। अग्रे भव इत्यर्थे डिमः अग्रिमः एवं पश्चिमः अन्तिमः कालार्थकान्मासादि शब्दात्त तत्र भव इत्यर्थे इकण यथा मासिकं सांवत्सरिकं मौहूर्त्तिकं पौर्वाह्णिकं आपराह्णिकमित्याद्यादि।

शरदः श्राद्धएवायं वा तु रोगे तथातपे।
निशातश्च प्रदोषाच्च वार्थं तादिस्तथा श्वसः।

अयमिकण्प्रत्ययः तयार्थे शरच्छब्दात् श्राद्ध एव साकाङ्क्षः यथा शारदिकं श्राद्धम्। अन्यत्र शारदश्चन्द्रमाः। रोगातपयोस्त्वर्थयोरय वैकल्पिकः यथा शारदः शारदिको-ज्वरः आतपश्च। निशायां प्रदोषे वा भव इत्यर्थे नैशिकं नैशं वा प्रादोषिकं प्रादोषं वा तम इत्यादि। श्वसः श्वः-पदात्तु तादिरयमिकण्प्रत्ययस्तथा विकल्पेनेत्यर्थः तेन श्वोभवमित्यर्थे शौवस्तिकं धनम्। शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मादिति भट्टिः। पक्षे श्वस्त्यं श्वस्तनमिति त्यतनौ वक्ष्येते।

सन्ध्यादेर्ऋतुनक्षत्रभेदाच्चाण् फले पुनः।
संवत्सरात् पर्व्वणि च प्रावृषस्त्वेण्यमीरितम्।

सन्ध्यादिगणात्तत्र भवमित्यर्थे अणेव यथा सान्ध्यं सन्धिवेलं आमावस्यं त्रयोदशं चातुर्दशं पाञ्चदशं पौर्णमासं प्रातिपदं वा तमः इति अत्र ऋतुभेदो ग्रीष्मादिः तस्मात्तत्र भवमित्यर्थे ग्रैष्मं शैशिरं तदन्तविधिना पूर्वग्रैष्मम् अक-

अवाहतूनामित्युत्तरस्य वृद्धिः । नक्षत्र भेदात्तु पुष्ये भवं पौषं औषधं तैषं रौहिणमित्यादि । संवत्सरात्तु फले पर्वणि च भवार्थेऽण्येव यथा सांवत्सरं फलं पर्व वा अन्यत्र तु कालार्थत्वादिकण् यथा सांवत्सरिकं कर्म्म प्रावृषि भव इत्यर्थे एण्यः यथा प्रावृषेण्यं तृणम् । प्रावृषेण्यं पयोवाह-मिति रघुकाव्यम् ।

वर्षातः ष्ठ्यादिकण् हेमन्तादण्यत् वा तलुक ।
साय चिर प्रगे प्राह्णे कालार्थाव्ययतस्तनट् ।

वर्षासु भवं वार्षिकं तृणम् । हेमन्ताद्भवार्थे यथैकण् तथा अणपि परन्त्वणि तकारस्य वा लुक् तेन हैमन्तिकं हैमनं हैमन्तमिति त्रिविधप्रयोगः । तदन्तविधिना पूर्वहैम-नमित्यादिरपि प्रयोगः । सायमादिभ्यस्तु सायन्तनं चिर-न्तनं प्रगेतनं प्राह्णेतनं दिवातनं दोषातनमित्यादौ भवार्थे तनट टानुबन्धत्वात् सायन्तनी तिथिः ।

परतश्च परारेश्च चिराच्च त्नो विभाषया ।
पुराशब्दात्तथा नोवा मध्याह्नादेश्च वा तनट् ।

परुत्नं परारित्नं चिरत्नं पक्षे परुत्तनं परारितनं चिरतनं पुरा शब्दादपि भवार्थे वा नः तेन पुराणं पुरा-तनमिति ।

तदापन्नप्रान्तु कालात् ष्ठ्यादिकण् ङीप् वा स्त्रियां ततः ।
मनुष्ये पूर्वतादीयस्थीयोऽन्यत् विभाषया ।

तत्काले भवमित्यर्थे तत्कालशब्दादिकण् तात्कालिको बोधः एवं आपत्कालिकः तदन्तस्य स्त्रियां वा ङीप् यथा तात्कालिकी तात्कालिका मतिरित्यादौ । पूर्वते भवो

मनुष्य इत्यर्थे पर्वताद्दीयण् पार्वतीयो नरः ततोऽन्यत्र तु पर्वतीयं पार्वतं वा फलमित्यादावक्षपि।

दिगादिभ्यो यदेव स्याच्छरीरावयवादपि।
इतिवस्त्यस्थिकुक्षिभ्य एयण् स्यात् कलशादृहेः॥

दिशि भवमित्यर्थे दिश्यम एवमाद्यम अन्त्यं रहस्यं दिव्यं उदर्यं यूथ्य वश्यं दण्ड्यमित्यादौ यत्। शरीरावयवादपि यथा दन्ते भवमित्यर्थे दन्त्यम एवं कण्ठ्यम ओष्ठ्य मूर्द्धन्यं मुख्यं जङ्घ्यम् इत्यादौ। इतौ भवमित्याद्यर्थे तु इत्यादेरेयस्येव यथा दार्त्तेयं वास्तेयं आस्थेयं कौक्षेयम्। असिं कौक्षेयमुद्यम्य चकारापत्रपं मुखमिति भट्टिः। कालसेयम आहेयमिति।

चतुर्मासादयञ् यस्त्वव्ययीभावतस्तथा।
अन्तः पूर्व्वादिकस्येवं समानात्तत्परादपि।

चतुर्मासेषु भवमित्यर्थे चातुर्मास्यं व्रतं चतुःपदस्याषाढादि चतुष्कत्वेन लक्षकत्वान्नात्र द्विगुरतः पञ्चकपालस्वरूरितत्रैव द्विगोस्तद्धितस्य न लुक्। यज्ञे तु चातुर्मासो याग: इत्यस्येव अन्तःपूर्वादव्ययीभावाद्भवार्थे इकण् यथा आन्तर्दैहिकम् आन्तर्गणिकम्। अव्ययीभावादित्येव तेनान्तःकरणे भवमान्तःकरणं दुःखमित्यस्येव समानात्तत्पराच्च यथा समाने भवं सामानिकम्। सामानिकोऽयं युवयो प्रयासः। समानदैशिकम्।

काद्यन्तवर्गादीयः स्याज्जिह्वामूलाङ्गुलादपि।
मित्राद्युत्तरतो वर्गात् यदीनावीय एव च।

कवर्गे भवः कवर्गीयो वर्णः इतीयः। एवञ्चवर्गीयः

टवर्गीयः इत्यादि। जिह्वामूलादङ्गुलाच्च जिह्वामूलीयः अङ्गुलीयः। मितादुत्तरवर्गात् तु प्रत्ययस्तिकं यथा मित्रवर्गे भव इत्यर्थे मित्रवर्ग्यः मित्रवर्गीणः मित्रवर्गीयः इत्यादि।

स्त्रीपुंभ्यां नञ्स्नञौ तत्र भवे भावे तु वा तयोः।
स्वरादौ तद्धिते प्राप्ते गोर्यदेव विधीयते।

स्त्रियां भवः स्त्रैणः। स्त्रैणेन नीता विकृतिं लघिम्ना इति भट्टिः। पुंसि भव पौंस्नः। स्त्रियाः पुंसश्च भावेऽर्थे तु नञ्स्नञौ विकल्पेन स्याताम्। तेन स्त्रियाभावः स्त्रैणं स्त्रीत्वञ्च पुंसो भावः पौंस्नं पुंस्त्वञ्च। गोपदात्तु यद्यदर्थे स्वरादितद्धितं प्रसक्तं तत्तदर्थे तदेव साकाङ्क्षं तेन गोरपत्यं गौर्देवता यस्य गवा चरति गोः समूह इत्याद्यर्थे गव्यमित्येव प्रयोगः। गोत्वं गोवदित्यादौ तु त्वादिको न स्वरादिः।

तत्र भवः।

ये भवार्थे यतः प्रोक्तास्तद्धितप्रत्ययाः पुरा।
जातेऽर्थेऽपि ततस्ते स्युः विशेषविधिना विना।

मथुरायां भवः इत्यर्थे इव मथुरायां जात इत्यर्थेऽप्यणोऽतिदेशः। एवं स्त्रैणः पौंस्नः ग्राम्यः ग्रामीणः इत्यादौ नञादेरपि प्रावृष एण्य प्रावृषिकः प्रदोषादेरिकणादिप्राप्तौ च कादिविशेषविधेर्वक्ष्यते।

प्रावृषस्तत्र जातेऽर्थे स्यादिकः शरदस्त्विकण्।
संज्ञायां विहितः पूर्वाह्णापराह्णादितस्तु कः।

प्रावृषि जातमित्यर्थे प्रावृषिकं पत्रं प्रावृषिका वृष्टिः। शरदि जातमित्यर्थे तु संज्ञायामिकण् यथा शारदिकाः

मुद्गप्रभेदाः शारदमन्नम् । पूर्वाह्णे जातमित्यर्थे तु पूर्वाह्णादिभ्यः कौ यथा पूर्वाह्णकं अपराह्णकं मध्याह्नकमित्यादि एवमार्द्रायां मूलायां जातमित्यर्थे आर्द्रकं मूलकं के ऽणः स्येति ह्रस्वः ।

अणकः स्यादमावास्याशब्दात्तद्धितादपि ।
स्थानान्तादथ गोशालखरशालाच्च नित्यशः ।
जातार्थकस्य लुग्वा तु वत्सशालादितो भवेत् ।

अमावास्यायां जात इत्यर्थेऽण् अकश्च स्यात् यथा आमावास्यः अमावास्यको बालकः । तद्धितादमावास्याशब्दादपि यथा च आमावास्यः अमावास्यकः । स्थानान्तादिद्विकस्य जातार्थकतद्धितस्य नित्यं लुक् स्यात् यथा गोस्थाने जातमित्यर्थे गोस्थानं पत्रम् एवमश्वस्थानं शशस्थानमित्यादौ गोशालायां जातमित्यर्थे गोशालं खरशालं इत्यत्राप्येवम् । नित्यममीषां क्लीवत्वं एभ्यो जातार्थस्य नित्यं लुग्विधानात् अश्विन्यादितो जातार्थकस्य वा लुगिति प्रतीयते । अतएव मघातोऽणो न लुग्भवेत् इत्यग्रे निषेधः सङ्गच्छते इति निबन्धकारः । वत्सशालादितश्च जातार्थस्य वा लुक् यथा वत्सशालायां जात इत्यर्थे वत्सशालो वात्सशालश्च वत्सः । एवमभिजित् आभिजितो वा बालकः । वत्सशालाभिजिच्चित्रा रेवती रोहिणी तथा । अश्वयुङ् मृगशीर्षश्च वत्सशालादिको गणः । मृगशिरसि भव जातं वा इत्यर्थे तु न तद्धितस्यानभिधानात् ।

अनुराधा तिष्यपुष्यौ हस्तस्वाती पुनर्वसू ।
विशाखा बहुलैतेभ्यो नित्यं जातार्थकस्य लुक् ।

अनुराधायां जातोऽनुराधः स्त्रीप्रत्ययस्य लुक् तद्धितलुकीति लुक् एव तिष्यः पुष्यः हस्तः स्वातिः पुनर्वसुः विशाखो बहुलः कथं बाहुलेयस्तारकाजिदिति बहुला कृत्तिका तत्र जात इति संज्ञायामेयण्।

श्रविष्ठाषाढयोरीयण् छण् वा शतभिषक् पदात्।

इति महामहोपाध्याय श्रीजगदीश-तर्कालङ्कार-भट्टाचार्य्य-विरचिता शब्दशक्तिप्रकाशिका समाप्ता।



४७ काव्यसंग्रह (सम्पूर्ण) ५
४८ लिङ्गानुशासन सटीक ।०
४९ ऋतुसंहार सटीक ।=
५० विक्रमोर्वशी सटीक १॥०
५१ वसन्ततिलकभाण ।=
५२ गायत्री व्याख्या ॥०
५३ सांख्यदर्शन (भाष्य सहित) सांख्य प्रवचन भाष्य २
५४ भोज प्रबन्ध ।॥०
५५ नलोदय सटीक ॥=
५६ ईश केन कठ प्रश्न मुण्डक माण्डूक्य (सटीक सभाष्य) ५
५७ छान्दोग्य (उपनिषद्) सभाष्य सटीक ५
५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक २
५९ वृहदारण्यक (उपनिषद्) सटीक भाष्य १०
६० सुश्रुत वैद्यक ४
६१ शार्ङ्गधर (वैद्यक) १
६२ वेतालपञ्चविंशति ।॥०
६३ पातञ्जलदर्शन (सभाष्यसटीक) १०
६४ आत्मतत्त्वविवेक (बौद्धाधिकार) २
६५ मुक्तिकोपनिषत् =
६६ उपमान चिन्तामणि ।
६७ नागानन्द नाटक १
६८ पूर्णप्रज्ञ दर्शनम् (मध्वस्वामि कृत भाष्य सहितम्) २
६९ चन्द्रशेखरचम्पूकाव्य सम्पूर्ण ३
७० सामवेदस्य मन्त्र ब्राह्मणम् भाष्य सहितम् २
७१ आरण्यसंहिता भाष्यसहिता १
७२ विद्धशालभञ्जिका नाटिका सटीक १
७३ कारण्डव्यूह (बौद्धशास्त्रम्) २
७४ कुवलयानन्द सटीक अलङ्कार ३
७५ प्रियदर्शिका नाटिका सटीक॥० (श्रीहर्षविरचित) ॥०
७६ सारस्वत व्याकरण सटीक पूर्वार्द्ध १।०
७७ वासवदत्ता सटीक २
७८ (कालिदास कृत) पुष्पवाण विलास काव्य सटीक ॥०
७९ महिष शतकम्, पदारविन्द शतकम्, स्तुति शतकम् मन्दस्मित-शतकम् कटाक्षशतकम् १
८० मनुसंहिता कुल्लूकभट्ट कृत टीका सहित ५
८१ नैषधचरितम् (मल्लिनाथ कृत टीका सहित) १०
८२ चन्द्रालोक प्राचीन अलङ्कार॥०
८३ वीरमित्रोदय (स्मृतिशास्त्र १०
८४ भावप्रकाश (वैद्यक) १०
८५ प्रबोधचन्द्रोदय नाटक सटीक

८६ अनर्घराघव नाटक (मुरारि कृत) २
८७ दैवतब्राह्मण सभाष्य १
८८ षड्विंशब्राह्मण १
८९ मीमांसा परिभाषा ।।०
९० अर्थसंग्रह (लौगाक्षी कृत) मीमांसा ।।०
९१ रघुवंश सटीक १।।०
९२ मेघदूत सटीक ।।।०
९३ ईश्वरनिरूपणम् (तर्कवाचस्पति कृतम्) १
९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्याय कृत) १
९५ न्यायदर्शन सभाष्य सवृत्ति २।।०
९६ सटीक वाल्मीकिरामायण (बालकाण्डस्य प्रथमावधि त्रयोदश सर्गपर्य्यन्तम् १।।०
९७ सटीक वाल्मीकि रामायण बालकाण्डस्य चतुर्द्दश सर्गावधि पञ्चविंशति सर्गपर्य्यन्तम् १।।०
९८ मदनपालनिघण्टु (वैद्यक) १
९९ संस्कृतशिक्षामञ्जरी प्रथमभाग—
१०० संस्कृतशिक्षामञ्जरी २य भागः ।०
१०१ साहित्यदर्पणम् १।।०
१०२ श्रीहर्षचरित वाणभट्टकृत २
१०३ अमरकोष ।।०
१०४ वेदान्तसूत्र शङ्कराचार्य्य कृत शारीरकभाष्य तथा गोविन्दानन्द कृत टीका सहित १०
१०५ वेदान्तपरिभाषा १
१०६ वेदान्तसार सटीक १
१०७ सटीक निदान ४
१०८ कामन्दकी नीतिसार १
१०९ मल्लिकामारुतप्रकरण सटीक २
११० अत्रि विष्णु, हारीत, याज्ञवल्क्य उशना अङ्गिरा यम आपस्तम्ब, संवर्त्त कात्यायन बृहस्पति पराशर व्यास शङ्ख लिखित दक्ष गौतम शातातप वशिष्ठ प्रणीत संहिता (धर्म्मशास्त्र) १५
१११ मत्स्यपुराण ६
११२ चरकसंहिता (वैद्यक सम्पूर्ण) १०
११३ रसेन्द्रचिन्तामणि रसरत्नाकर (वैद्यक) ६
११४ भगवद्गीता शाङ्करभाष्य आनन्दगिरिकृत टीका तथा सुबोधिनी सहित ५
११५ शब्दशक्तिप्रकाशिका १
११६ मालतीमाधव सटीक १।।०
११७ सटीक भट्टिकाव्य ४
११८ सटीक काव्यप्रकाश ४
११९ सटीक वाल्मीकिरामायण बालकाण्डस्य षड्विंशावधि पञ्चाशत् सर्ग पर्य्यन्तम् १।।०
१२० सभाष्यशाण्डिल्यसूत्र ।।=
१२१ लघुकौमुदीव्याकरणम् ।।०
१२२ महानाटकम् १।।०

कलिकाता संस्कृत विद्यामन्दिरे—बि, ए, उपाधिधारिण
श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य सकाशात् लभ्यानि ।